सुनन्दा संगता चैव [विशाला च यथोदिता ।
सुनन्दायां ग्रहं कृत्वा ततश्चैव] प्रयोजयेत् ॥ १३७ ॥
मध्यमासारिते तालो यो मया परिकीर्तितः ।
[1]शम्यात्रयस्य कर्तव्यः सुनन्दाद्यस्य पण्डितैः ॥ १३८ ॥
[2]सुमुखी च सुनन्दा च संगतप्रथमा तथा ।
सुमुख्यादौ ग्रहं कृत्वा यथोक्तं संप्रयोजयेत् ॥ १३९ ॥
[3]ज्येष्ठासारितके तालो निःशब्दः शब्दवांस्तथा ।
[4]स सर्व एव कर्तव्यो बुधैर्ध्यतस्रणामपि ॥ १४० ॥
[5]संयोगः कण्डिकानां तु तालोऽयं परिकीर्तितः ।
[6]एवमासां समायोगाद्वर्धमानकमिष्यते ॥ १४१ ॥

---

'प्रथमं कण्डिकां कृत्वा पालतालप्रयोजिताम् ।
अर्धि(न्ति?)मार्धकलाहीना बलमासारितं तु तत् ॥
द्वितीयां कण्डिकां कृत्वा प्रथमं सकला यदि ।
पूज्यते पूर्वतालेन यदा यत्तालयान्तरम् ॥
कनिष्ठासारिते का(ता?)लो यो यथा परिकीर्तितः ।
वर्धमानां तदा विश्रेर्न विघृतेन योजयेत् ॥
स हि वर्धमाने वा कनिष्ठं न हि दक्षिणे ।
द्विगुणाक्षर अन्यमाध(?) प्रयोजनम् ॥
वृत्तकालविशेषाच्च पालताललयान्तरम् ।
कनिष्ठासारिते तालो यो मया परिकीर्तितः ॥
स एव सर्वः कर्तव्यः प्रथमे कण्डिकाद्वये ।
तृतीया सद्वितीया च प्रथमा चैव तद्भवेत् ॥
द्विकलं योगमाश्रित्य मध्यमासारितं तथा ॥' इति सार्धं पद्यपद्कम् ।

१. 'सोऽन्यत्र यस्य कर्तव्यः सुनन्दा न्यस्य योक्तृभिः' । का.

२. अस्य श्लोकस्य स्थाने—

'चतुर्थमादितः कृत्वा चतस्रः कण्डिका यदि ।
चतुष्कयोगमाश्रित्य ज्येष्ठमासारितं तथा ॥' इति श्लोकः ।

३. 'ज्येष्ठलं सारिते तालो' का. ४. 'स एव सर्वः कर्तव्यो' का. ५. 'संयोगे कण्डिकालोपः······परिकीर्तितः ।' का. ६. इत. पूर्वं का. पुस्तके—

वालं न सु(नव?)कलं ज्ञेयं दशशब्दलयान्तरम्।
पञ्चपष्टि(ष्ठ?)कलं ज्येष्ठं त्रयस्त्रिंशत्तु मध्यमम्॥ १४२॥
कलाना वृद्धिमासाद्य त्वक्षराणां तु वर्धनात्।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते॥ १४३॥
आसारितेषु गीतेषु वर्धमानेषु चैव हि।
द्विगुणस्तालयोगेन कार्यो ह्यक्षरजो विधिः॥ १४४॥
समासायान्तरयिन (?) संनिपातो यदा भवेत्।
अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभिः॥ १४५॥
एवमेतन्मया प्रोक्तं वर्धमानस्य लक्षणम्।
आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम्॥ १४६॥
अन्यूनाया कलाया तु ध्रुवं प्राज्ञो निवेदयेत्।

---

'प्रयोगस्तु यथा तथा पिण्डबन्धैर्विकल्प्यते।
प्रत्येकं ह्यङ्गविन्यासः सर्वेषां च पृथक् पृथक्॥
बालं नवकलं ज्ञेयं दशसप्तलयान्तरम्।
पञ्चपष्ठकलं ज्येष्ठं त्रयत्रिं(स्त्रिं?)शच्च मध्यमम्॥
एतत्तालविधानं सर्वेष्वासारितेषु च।
एवमासारिते बद्धं वर्धमानकमुच्यते॥
वर्धतालस्तथा प्र यत्राद्याभिनयवर्धनात्।
प(पा?)त्राणां वृद्धियोगाच्च वर्धमानकमुच्यते॥
वर्धमानशरीरस्य भवेदासारितस्य च।
कार्यकारणभावेन परस्परविकल्पना॥
आसारितेषु सर्वेषु वर्धमानेषु चैव हि।
द्विगुणा(ण?)स्ताल योगेन कार्यं स स्वरजो विधिः॥
समासावन्तरहितः संनिपातो यदा भवेत्।
अन्त्या कला द्विमात्रा तु तदा कार्या प्रयोक्तृभिः॥'

'एवमासां समायोगात्' इत्याद्यारभ्य 'अ त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभिः।' इत्यन्तश्लोकचतुष्कस्थाने पद्यसप्तकम्। १ 'वर्धमानकलक्षणम्' क. २ 'आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम्।' १५१ इत्याद्यारभ्य, 'अत ऊर्ध्वं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि॥ १८०॥' इत्यन्त २९ मूनत्रिंशत्पद्यानां स्थाने क. पुस्तके—

अथ तालाक्षरवशास्त्वेषां ये तांश्च योजयेत् ॥ १४७ ॥
द्रुते लघ्वक्षरे चैव ध्रुवे साम्यं न विद्यते[1]।
न विद्यते त्रिभिः पातैः समत्वमुपदिश्यते ॥ १४८ ॥
तालैश्च संनिपातैश्च शम्याभिश्च ध्रुवेण च ।
कनिष्ठासारितं कार्यं मध्यमं ज्येष्ठमेव च ॥ १४९ ॥
.......................................... ।
द्विगुणोत्तरया वृद्ध्या ह्रस्वैव न मध्यमं विधातव्यम् ॥ १५० ॥
प्रस्तारेण कलानां शम्यातालान्तरोपेतम् ।
पूर्वं शम्या कार्या द्विकलस्तालः कलाद्वयं शम्या ॥ १५१ ॥
पुनरेककलस्तालस्त्रिकलः स्यात्संनिपातश्च ।
त्रिकलोऽन्यस्मिंस्तालः शम्यैकः''''कलाद्वये तालः ॥ १५२ ॥
द्विकला च पुनः शम्या तालः क.......... ।
.................................... ॥ १५३ ॥
त्रिकलश्च संनिपातो भूयो विधिरेव कर्तव्यः ।
द्वादश कलास्तृतीये तस्यान्ते संनिपातश्च ॥ १५४ ॥
प्रथमस्त्वष्टकलः स्याद्द्वादशकलिकौ तथापरौ ज्ञेयौ ।
अन्त्यश्च संनिपातो मध्यस्यासारितस्योक्तः ॥ १५५ ॥
ये पूर्वमङ्गुलिकृताः प्रवेशाभि(शनि?)ष्कामसंज्ञया गदिताः ।
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञैः ॥ १५६ ॥
अयं(?) ज्येष्ठे तु कर्तव्यं शम्यातालकलान्वितम् ।
शतत्रयोऽथ निष्कामो विक्षेपोऽथ प्रवेशनम् ।
अङ्गुलीनां तु कर्तव्यं कलामानं चतुष्कलम् ॥ १५७ ॥
पूर्वं शम्या कार्या चतुष्कलोऽन्यो भवेत्ततस्तालः ।
शम्या चतुष्कला स्याद्द्विकलस्तालस्तथा चैव ॥ १५८ ॥

'अत ऊर्ध्वं प्रवक्ष्यामि गीतकानां तु लक्षणम् ।
सर्वेषामेव गीतानां वस्तुष्वेव यथेषु च ॥' इत्यधिकं पद्यम् ।

1. 'भपन्ति' द्वि का.

कार्यस्य संनिपातोऽपि षट्कलः षट्कलस्तु तालः स्यात्।
द्विकला च पुनः शम्या चतुष्कलः स्यात्पुनस्तालः॥ १५९॥
शम्या चतुष्कला स्याद्विकलस्तालश्च कर्तव्यः।
पुनरेव संनिपातश्च षट्कलः संविधातव्यः॥ १६०॥
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि संनिपाते तु।
पुनरेष चेष(?)मङ्गुलिविक्षेपात्संप्रवक्ष्यामि॥ १६१॥
पूर्वं शम्या तथावापो निष्क्रामश्च ततः पुनः।
विक्षेपोऽथ पुनस्तालः पुनरावाप एव च॥ १६२॥
अनामिकी(का?)कनीयस्यात्रि(स्योर्नि?)ष्क्रामश्च पुनस्ततः।
ताभ्यामेव हि विक्षेपः शम्यायो वापि एव च॥ १६३॥
मध्यमायां ततस्तालो विक्षेपोऽथ प्रवेशनम्।
आवापश्च पुनः कार्यस्तर्जनीनिष्क्रमः पुनः॥ १६४॥
विक्षेपश्च पुनः कार्यः संनिपातस्तथैव वा।
कलाः सप्तदशैवैताः संनिपातो भवेदयम्॥ १६५॥
आवापश्च पुनः कार्यः कनीयस्याथ निर्गमः।
विक्षेपश्च प्रवेशश्च आवापश्च ततः पुनः॥ १६६॥
अनामिकाकनीयस्योस्ततस्तालो भवेत्पुनः।
विक्षेपश्च पुनस्ताभ्यां ततः शम्याः प्रकीर्तिताः॥ १६७॥
आवापस्य कनीयस्यां ततस्तालं नियोजयेत्।
विक्षेपश्च प्रवेशश्च पुनरावाप एव च॥ १६८॥
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः।
संनिपातः[1] पुनश्चैव चतुर्विंशतिको भवेत्॥ १६९॥
तृतीयः संनिपातस्य एष एव विधिः स्मृतः।
एवं ज्येष्ठस्य विज्ञेयस्तालाङ्गुलिविकल्पितः॥ १७०॥

१. 'लेष एव' ख.

प्रथमः षोडशकलश्चतुर्विंशतिकस्तथा ।
द्वितीयश्च तृतीयश्च संनिपातकलाधिकः ॥ १७१ ॥
प्रत्येकं पातनान्येषु दृष्टाः (तालाः?)सप्त भवन्ति हि ।
शम्यातालकृतानीह संनिपातकृतानि च ॥ १७२ ॥
हृन्यं(?)मष्टमतालं त्रिसंनिपातं त्रिवस्तु चाप्येवम् ।
सप्तदशपातयुक्तं विद्यादासारितं सम्यक् ॥ १७३ ॥
आसारितानामित्येवं गदितं लक्षणं मया ।
गीतानां वस्तुकानां च प्रयोगः परिकल्प(ल्प्य?)ते ॥ १७४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि ।
विव(वि?)धैककवृत्तानि त्रीण्यङ्गानि समासतः ॥ १७५ ॥
एकैकं तु विदार्येका ते(हे?)तुमद्विविधः स्मृतः ।
पदपरं ऽपवरं वृत्तं त्र्यङ्गं सहरसं च तत् ॥ १७६ ॥
विव(वि?)धैककयोः प्रायो मद्रके तु प्रयोजनम् ।
मैव(क?)र्योश्चापि वस्त(स्त्वर्धे) पादे रोविन्दकस्य च ॥ १७७ ॥
रोविन्दकोर्चराभ्यां तु वृत्तमुल्लोप्यैके तथा ।
पाणिकायां बहिर्गीता लास्ये वै परिकीर्तितम् (ता?) ॥ १७८ ॥
प्रवृत्तमवगाढं च द्विविधं सर्वं(वृत्त?)मुच्यते ।
आरोहित्वादवगाढं प्रवृत्तमवरोहतः ॥ १७९ ॥

---

१. 'सर्वेषामेव गीताना वस्तुष्ववयवेषु च । विव(वि?)धैककवृत्तानि त्रीण्यङ्गानि समासतः ॥' इत्यधिकं च-पुस्तके. २. 'एकतन्तुविदार्येका द्वे चापि विविधैः स्मृतः ।' का. ३. 'विदार्यैः परिकीर्तिता. ।' का. ४. 'इतोऽग्रे का. पुस्तके—.

'पदवर्णसमाप्त(प्ति?)स्तु विदारीत्यभिसञ्ज्ञिता ।
न्यासापन्यासमं शान्तं वस्तु तत्परिकीर्तितम् ॥
विदारयन्ति यस्माद्धि परमप्यस्वरो यदा ।
तदा विदारी विज्ञेया गुरुवर्णानुकारिणी ॥' एषा श्लोकद्वयी समधिका.

५. 'प्रकर्य.' इत्युत्तरत्र, 'प्रवुर्योश्चापि' का. ६. 'रोविन्दको(को?)तराभ्या तु' का. ७. '°मुत्तम्यकस्य हि' का. ८. 'बहिर्गीते' का. ९. 'लास्ये चैव प्रकीर्तिते ।' का. १०. 'इतम्' का. ११. '°मपरो हि च' का.

आरोहणं च[1] द्विविधं तथा चैवावरोहणम्।
न्यासापन्यासविहितं मार्गान्तर(न्तरे?)कृतं तथा॥ १८०॥
त्र्यवरैकादशपरा विदार्यः परिकीर्तिताः।
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम्॥ १८१॥
अध्य[र्द्धाद्वि?] तृतीयाश्च[2] संनिपाताः[3] प्रमाणतः।
उल्लोप्यके[4] विदारी तु स्मृता वैहायसे[5] तथा॥ १८२॥
विध(वि?)धेन[6] तु तत्कार्यो युग्मवृत्तेन चैव हि।
नद्यर्धसंनिपाते[7] तु भवेदङ्गसमापनम्॥ १८३॥

---

१. 'तु' का. २. 'अध्यर्धा च तृतीया च' का. ३. 'सनिपातप्रमाणतः।' का. ४. 'चल्लोल्यते का. (?)' ५. 'वैहायसे' का. ६. 'विविधेन च ताः कार्या युग्मवृत्तेषु चैव हि।' का. ७. 'नद्यर्धे सनिपातस्य' का. ८. 'इतोऽग्रे का-पुस्तके—

'विध(वि?)धस्त्रिविधो ज्ञेयः कीर्त्यमानान्निबोधत।
सामुद्रश्च समुद्रोऽपि विवृत्तश्चेति कीर्तितः॥
न्यासतोऽपि विधो ज्ञेयो भुक्ता वै गेयकं सदा।
आद्या तु मद्रके चैव सामुद्रः परिकीर्तितः॥
लघुवर्णसमं ज्ञेयं सामुद्रे तु विधीयते।
तत्वन्ते च तृतीये च तद्वै गेयकसंज्ञितः॥
विदार्यङ्गसमोऽर्धे स्यात् अर्धे विसदृशं तथा।
योगे तु अर्धसामुद्रस्तथा ज्ञेयः प्रयोक्तृभिः॥
विदारी विषमा ज्ञेया न्यासापन्यास एव च।
असंप्रयोगबाहुल्यं विवृत्तं परिकीर्तितम्॥
द्विविधश्चैकतो वापि विज्ञेयं तु यथाक्रमम्।
न्यासापन्यासमंशान्तं सदा ज्ञेयं प्रयोक्तृभिः॥
सन्यासश्चैव विन्यासो ह्यङ्गमध्यो यथाक्रमम्।
विन्यासः स [illegible] विज्ञेयो विदारीमध्यमस्थितः॥
विदारी यत्रविन्यासः पदान्ते क्वचिदेव हि।
न तद् बाहुल्यमुद्दिष्टं प्रयोगस्य प्रयोक्तृभिः॥ इत्यधिकः पाठः।

[1]गीतानि सप्तमद्रोकोल्लोप्यके च परान्तकम् ।
[2]प्रेकर्यो वैणकं चैव रोविन्दकमथोत्तरम् ॥ १८४ ॥
द्विविधं मद्रकं [3]तत्र चतुर्वस्तु त्रिवस्तु च ।
शीर्षकेण समायुक्तं तच्च [4]ज्ञेयं त्रिवस्तुकम् ॥ १८५ ॥
पञ्च षट् सप्त तानि [5]स्युः शीर्षकं च [6]परान्तके ।
प्रकर्यामथ चत्वारि स्युस्त्रीण्यर्धाधिकानि च ॥ १८६ ॥
रोविन्दकं [7]तु सप्ताङ्गं षोडशाङ्गं परं स्मृतम् ।
द्वौ पादौ समवर्णौ [8]तु एकको ( कौ ! ) वात्र कीर्तितौ ॥ १८७ ॥
प्रवृत्तं त्रिविधं [9]वापि तस्मात्[10]पादौ प्रयोजयेत् ।
सप्ताङ्गं द्वादशाङ्गं वा [11]मार्क्षमो(प्रोक्तमा!)वेणकं बुधैः ॥ १८८ ॥
[12]तत्र त्र्यन्तं तु सप्ताङ्गं [13]त्र्यन्तं द्वादशकं [14]तथा ।
[15]पादः संधिर्मोपघातोर्[16]यजं ( वज्र ! ) संपिष्टकं तथा ॥ १८९ ॥
[17]पुकक चतुरस्रं वाप्युपवर्तनमेव च ।
[18]उत्स(प!)पातः प्रवेणी च व्यङ्कं संहरणं तथा ॥ १९० ॥
अङ्गानि द्वादशाङ्गस्य स्मृतान्यो(न्या!)वेणक[19]स्य च ।
[20]संपिष्टकोपघाताभ्यां प्रवेणी[21]भ्यां विवर्जितम् ॥ १९१ ॥
उपवर्तन[22]हे(ही!)नं च सप्ताङ्गपरिवर्जितम् ।
नि(वि!)[23]वर्तनं तु सप्ताङ्गो ( ङ्ग ! ) तुल्यवर्णपदं स्मृतम् ॥ १९२ ॥

---

१. 'ज्ञेयानि सप्त गीतानि मन्द्रकोऽप्योपपान्ततः ।' इति का. २. 'प्रतर्यो(?) वैणको विद्याद् हुल्लोस्तु(?)श्चोत्तरं तथा ।' इति का. ३. 'मन्द्रकं' का. ४. 'तत्तु' का. ५. 'वापि' का. ६. 'चापरान्तके' का. ७. 'रोविन्दकस्तु' का. ८. 'समवर्णेन एकैकस्तत्र कीर्तितः ।' का. ९. 'चापि' का. १०. 'तस्य त्वादौ' का. ११. 'प्रोक्तमावेणकं बुधै.' का. १२. 'तत्र त्र्यन्तं तु' का. १३. 'त्र्यन्त' का. १४. 'स्मृतम्' का. १५. 'प्रस्तारसंधिमाषोस्यो वज्रसविष्टकं तथा ।' का. १६. 'सज्जं' ख. १७. 'शीर्षकं चतुरस्रं च तथा चैवोपवर्तनम् ।' का. १८. 'उपपात.' का. १९. '°न्यावेणकस्य तु' का. २०. 'सविष्टको' का. २१. 'प्रवेण्या परिवर्जितम्' का. २२. 'उपवर्तविहीनं च सप्ताङ्गमपि कीर्तितम् ।' का. २३. 'विवर्तनं तु सप्ताङ्गं' का.

अन्त(न?)योर्द्वादशाङ्गे तु तथान्यपदमिष्यते ।
उल्लोप्यकेऽपि चाङ्गानामेष एव विधिः स्मृतः ॥ १९३ ॥
अवगाढप्रवृत्तं च महाजनिकमेव च ।
आगात्र(?)स्यात्तथा द्व्यङ्गो महाजनिकवर्जितः ॥ १९४ ॥
स्थिति(त?)प्रवृत्तं संयोगादेकाङ्गो (चा?) या(ङ्गं?)पि कीर्त्यते ।
एकाङ्गे संविधातव्यं महाजनिकमेव च ॥ १९५ ॥
द्व्यङ्गं चितप्रवृत्तं वा चैकाङ्गं वापि कीर्तितम् ।
द्व्यङ्गे व्याससमासाभ्यां ध्रुवाधातुविधिः स्मृतः ॥ १९६ ॥
स्थितं प्रवृत्तं च तथा महाजनिकमेव च ।
त्र्यङ्गोच(ङ्गस्तु) स्यादथ द्व्यङ्गो महाजनिकवर्जितः ॥ १९७ ॥
एकाङ्गोऽपि विधातव्यो महाजनिकसंयुतः ।
एवं व्याससमासाभ्यां बहुधाङ्गविधिः स्मृतः ॥ १९८ ॥
चतुरस्रस्तथा त्र्यस्रो विस्र(?)श्चान्तः प्रकीर्तितः ।
उ(आ?)वेणकस्य संहारो द्व्यङ्ग एकाङ्ग एव च ॥ १९९ ॥
नादौ न मध्ये संहारे नित्यं चैव प्रयुज्यते ।
एकक(को?)विवधोयापि (विविधो वापि?) कार्यो ह्यन्ते प्रयोक्तृभिः ॥
उल्लोप्यकं पडवरं शैत्यं चैव (विंशत्यङ्ग?) परं स्मृतम् ।
तत्रं संहरणे कार्यं सु(मु?)खप्रतिमुखान्वितम् ॥ २०१ ॥
महायसकसंयुक्तं तेनापि च विवर्जितम् ।
त्रिष्वङ्गेष्ववरं ज्ञेयं परं स्याद्द्वादशस्वपि ॥ २०२ ॥

---

१. 'अनयो' का. २. 'यथान्यपद°' का. ३. 'स्थितं प्रवृत्तं च' का. ४. 'त्र्यङ्गान्तरः स्यान्त(त?)था द्व्यङ्गो' का. ५. 'स्थितप्रवृत्तं' ख. 'स्थितप्रवृत्तसंयोगादेकाङ्गं चापि कीर्त्यते ।' का. ६. 'द्व्यङ्गं स्थितं प्रवृत्तं वाप्येकमङ्गं प्रकीर्तितम् ।' का. ७. 'द्व्यङ्गे व्याससमासाभ्याम्' इत्यारभ्य 'चतुरस्रस्तथा त्र्यस्रो विस्र(?)श्चान्तः प्रकीर्तितः ।' इत्यन्तः पाठः का. पुस्तके नास्ति । ८. 'आवेणकस्य' का. ९. 'द्व्यङ्गेऽप्येकाङ्ग एव वा' का. १०. 'एतदर्धं' का. पुस्तके नास्ति । ११. 'एकैकोविविधोवापि कार्योऽप्यन्ते बुधैः सदा' का. १२. 'विंशत्यङ्गपरं स्मृतम्' का. १३. 'तत्र संहरणं ज्ञेयं मुखप्रतिमुखान्वितम् ।' का. १४. 'पद्यमेतत् का. पुस्तके नास्ति ।

[1]एकोद्व्यङ्गवरं (ङ्ग'पर्द्परं') ज्ञेयं वैहायस(सि')कमेवं च ।
[2]अस्य चाङ्गत्रयेऽतीते प्रयोगमुपपादयेत् ॥ २०३ ॥
[3]उल्लोप्यकोत्तराभ्यां तु मुखप्रतिमुखे [4]स्मृते ।
ततोऽङ्गानां समासो वा विस्तारो वा विधीयते ॥ २०४ ॥
मुखप्रतिमुखे चैवं[5] ज्ञेये विविध[6]सञ्ज्ञिते ।
[7]वृत्तप्रतिमुखं (खे') च स्यादन्या या(दनयो')स्तु समासतः ॥२०५॥
उल्लोप्यके तथा[8] शाखा सोत्तरो (रे') सांपरान्तके[9] ।
[10]प्रतिशाख्या (खा') तथा चैव सवर्णान्यपदा[ः ?] स्मृताः ॥२०६॥
उत्तरं द्वादशपरं षडङ्गावरमिष्यते ।
[11]आकारपा(वा')दहीनेन तुल्य रोविन्दकेन तु ॥ २०७ ॥
अन्ते [12]चैव विशेषेण स्थाप्यमस्य हि शीर्षकम् ।
एवमङ्गविधिः कार्यः सप्तरूपे प्रयोक्तृभिः ॥ २०८ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतानां[13](ना')या तु(वस्तु')कल्पनम्[14] ।
गुर्वेदाष्टकं[15] कृत्वा न्यसेल्लघ्वष्टकं पुनः[16] ॥ २०९ ॥
तत्रोपवहनं कार्यं प्रथमे तु गुरुद्वये ।
गुर्वक्षरे तृतीये तु ततः स्यात्प्रत्युपोहनम् ॥ २१० ॥
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चमे ।
षष्ठसप्तमयोस्तालः शम्या गुर्वक्षरेऽष्टमे ॥ २११ ॥

---

१. 'एकाङ्गं पद्परं ज्ञेयं वैदायसिकमेव च ।' का. २. 'एतदर्धमपि का. पुस्तके नास्ति । ३ 'उल्लाप्यको°' का. ४ 'मुखप्रतिमुखं स्मृतम्' का. ५. 'वापि' का. ६ 'विवधसञ्ज्ञिते' का. ७. 'वृत्त प्रतिमुखे च स्यात्' का. ८. 'तु शाखाख्य' का. ९ 'सोत्तरे सांपरान्तरे' का. १० 'प्रतिशाखा तथा चैषा समवर्णपदा स्मृता ।' का. ११. 'आकारवादहीनेन सह' का. १२ 'चास्याविशेषेण स्थाप्ये मध्ये च शीर्षकम् ।' का. १३ 'गीतानां वस्तुकल्पनम्' का. १४. 'का. पुस्तकेऽत्र—

'कला षोडश विज्ञेया मात्रा सर्वेष्ववस्तुषु ।
तस्याश्चैव चतुर्भाग पादभाग प्रकीर्तित ॥' इत्यधिकम् ।

१५ 'आदौ गुर्वष्टक कृत्वा' का. १६. 'तथा' का.

ततोऽर्धकलिकान्पातान्कुर्याल्लघ्वक्षरेषु च ।
गुर्वक्षरे तालगीतपातास्तु कलिकाः स्मृताः ॥ २१२ ॥
शम्यातालौ तालशम्ये तेषु कुर्यात्क्रमेण तु ।
तालं शम्यां च तालं च संनिपातं तथैव च ॥ २१३ ॥
एवमेककलो ज्ञेयः कलायोगस्तु म(म?)द्रके ।
गुरुविश्लेषपादेन द्विकलं परिकीर्तितम् ॥ २१४ ॥
विशेषेण कलास्तत्र पूर्वं पूर्वं निवेशयेत् ।
द्विकले म(म?)द्रके चैव त्रिकलं स्यादुपोहनम् ॥ २१५ ॥
कलिकं द्विकलं वापि न वा स्यात्प्रत्युपोहनम् ।
द्विकलैर्गुर्वक्षरकृतैः पादभागै(गैः)र्यथाक्रमम् ॥ २१६ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तुसंज्ञितम् ।
त्रिवस्तु द्विकलं ज्ञेयं भवेद्यतो विधीयते ॥ २१७ ॥
गुर्वक्षरेषु ये पाताः शम्यातालादयः स्मृताः ।
त एव पादभागेषु द्विकलेष्वत्र योजयेत् ॥ २१८ ॥
अष्टमी षोडशी शम्या दशमी च यथाक्रमम् ।
चतुर्दश्यां कलायां तु तान्वेदा (तालं न?) द्वादशीयुतम् ॥२१९॥
लघ्वेष्टके (क्षरे?) पात(द?)विधिर्यथापूर्वं प्रकीर्तितः ।
वस्तुत्रयेऽपि द्विकले एवं पातान्प्रयोजयेत् ।
शीर्षकं चैव कर्तव्यं षट्कलं पद्मपाणिना ॥ २२० ॥

१. 'ततोऽर्धकलिकान्' का. २. 'तु' का. ३. 'तालगीते पादास्तु कलिता.' का. ४. 'द्वि वात्र (तु?) पूर्वशः' का. 'इतोऽग्रे—'शीर्षकं चास्य कर्तव्यं बुधैर्धाप्पुटेन तु ।' इत्यर्धमधिकं का. पुस्तके. ५. 'तालयोगस्तु मन्द्रके' का. ६. 'परिचक्षते' का. ७. 'विश्लेषणे कलाधान यथा पूर्वं निवेशयेत् ।' का. ८. 'द्विकले मन्द्रके चैव' का. ९. 'कलिका द्विकलं चापि भवेच्च प्रत्युपोहनम् ।' का. १०. 'पादभागै.' का. ११. 'पातविधिस्त्वयम्' ख. 'पादे पादविधिस्त्वयम्' का. १२. 'गुर्वक्षरे' का. १३. 'तानेव पादभागेषु द्विकलेऽत्र प्रयोजयेत्' का. १४. 'तान्वेदा' क. 'तालं न' का. १५. 'लघ्वक्षरे पादविधि-' का. १६. 'प्रकीर्तितम्' का. १७. 'चैवं' का.

[1]क्रंडंकंडं शैलेन्द्रराजसंस्थितमीशं शान्तं शिवं पन्नगेन्द्रपरिबद्धजटं मुनिगणनमितं ध्यानाभिरतं ज्ञानमयं मदनाङ्गहरं विभुं प्रभुं शरणगतोऽहं दैत्यैर्नागैः संस्तुतमीशं त्वां वेदमयं त्वां कर्तारं त्वां भुवनपतिं सर्वलोकनमस्कृतं ऋग्यजुःपति(ठि?)तं गङ्गाधरं शूलधरं भुजगेन्द्रधरं प्रणतोऽस्मि शिवं मृगराजचर्मपरिबद्धतनुं विपुलगतिं वृषभगतिं ज्वलनशिखिसहशकपिलजटं तमहं नमामि शिवं शिरसा ।

समाप्तं द्विकलमद्रकम् ॥

देवं विमलं प्रणतार्तिहरं मायाधारं मायारूपं जटिलं नमामि शिवं शिरसा ।

शीर्षकं षट्कले समाप्तम् । द्विकलमद्रकम् (?) ।

चतुष्कलं प्रवक्ष्यामि यथावद्द्विजसत्तमाः ।
चतुष्कलैः [2]पादभाजे(गै?)र्यथापूर्वमुदाहृतैः ॥ २२१ ॥
चतुर्भिस्तु भवेन्मात्रा [3]त्रिर्मात्रं वस्तुसंज्ञितम् ।
पातांश्चैव प्रवक्ष्यामि [4]पादभागैर्यथाक्रमम् ॥ २२२ ॥
चतुर्थे पञ्चमेत्ये(चै?)व (न्त्ये च?) शम्या कार्या [5]तथाष्टके ।
दशमैकादशेष्य (शम्या ?) द्वितीया नवमे स्मृता ॥ २२३ ॥
[6]षष्ठे तु सप्तमे [7]ताला [8]अन्ते च नवमस्य हि ।
[9]दशमैकादशे चैव द्वितीयः समुदाहृतः ॥ २२४ ॥
[10]आद्यं तु [11]द्वादशे प्रोक्तं संनिपातोऽवसानतः ।
एवं पातविधानं स्यात्[12]सर्ववस्तुं प्रयोजयेत् ॥ २२५ ॥
[13]द्विर्मायाद्विकलस्यैवं विज्ञेयं च चतुष्कलम् ।
सप्तमे लघुनि त्वन्त्यो द्विर्मावोऽस्मिन्विधीयते ॥ २२६ ॥

---

१. 'क्रंडुं क्रंडु' ख. एष गद्यभागः का. पुस्तके नास्ति । २. 'पादभागै.' का. ३. 'त्रिमात्रः स तु संज्ञित.' का. ४. 'पादभागे' का. ५. '०ष्टमे तथा' का. ६. 'षष्ठे च' का. ७. 'ताल' का. ८. 'नवमेऽन्त्य हि' का. ९. 'नवमैकादशे चैव' का. १०. 'आद्ये तु' का. ११. 'द्वादशं', का. १२. 'सर्वं वस्तु' का. १३. का-पुस्तके तु 'द्विर्मात्राद्विकलस्यैवं' इत्यादि श्लोकचतुष्टयस्थाने—

चतुष्कलोऽत्र विहितः कलाष्टकमुपोहनम् ।
एका द्वे च चतुष्कश्च तथा स्यात्प्रत्युपोहनम् ॥ २२७ ॥
यथाक्षरस्य कर्तव्यं मद्रकस्य तु शीर्षकम् ।
चतुष्कलः पञ्चपाणिर्द्विकले द्विकलः स्मृतः ॥ २२८ ॥
चतुष्कलस्तु कर्तव्यो मद्रके तु चतुष्कले ।
त्रिवस्तु त्रिप्रमाणं तु त्र्यस्रतालसमुद्भवम् ॥ २२९ ॥
इत्युक्तं मद्रकं पातैस्त्रयोदशभिरन्वितम् ।
गुर्वक्षराणि चत्वारि चत्वारि स्युर्लघूनि च ॥ २३० ॥
तृतीये च चतुर्थे च शम्यातालौ लघूष्व(न्य?)पि ।
तालं शम्यां च ताले च संनिपातं च योजयेत् ॥ २३१ ॥

---

'प्रथमे वस्तुके ह्यादौ कलाष्टकमुपोहनम् ।
प्रत्युपोहनमित्युक्तं द्वितीयं द्विकलं भवेत् ॥
तृतीयं त्रिकलं ज्ञेयं चतुर्थे तु चतुष्कलम् ।
अस्यान्ते शीर्षकं कार्यं षट् पिता पुत्रकेन तु ॥
द्विकले तु यथापातं पञ्चपाणिचतुष्टये ।
द्विके(ती?)यकं तृतीये च चतुर्थे च यथाक्रमम् ॥
परिवर्तसमाप्तिस्तु चतुर्थे सा विधीयते ।
मन्द्रांशोपोहन वस्तु प्रथम च द्वितीयकम् ॥

एषा श्लोकचतुष्टयी वर्तते ।

१. 'चतुर्थस्तु त्रिप्रमाणं त्र्यस्रतालसमुद्भवम् ।' इति का. २. 'मन्द्रकम्' का. ३. का पुस्तके तु 'तृतीये च चतुर्थे च' इत्यादि 'वस्तुशाखाख्यमित्येतद्गदितं सपरान्तकम् ॥ २४१ ॥' इत्यन्तपाठस्थाने—

'द्वितीये गुरुके शम्या तृतीये ताल एव च ।
लघ्वक्षरेऽष्टकमितान् पातानेतान् प्रयोजयेत् ॥
ताल शम्या च तालश्च संनिपातोऽन्त्य एव च ।
त्र्यस्रतालसमुद्भूतं विज्ञेयमवरान्तरम् ।
गुर्वक्षराणि विश्लिष्य विकलं संप्रयोजयेत् ॥
पादभागैस्तथा पङ्क्ति द्विकल तु चतुष्कलम् ।
'.........शम्यातालपतौ यथाक्रमम् ॥

लघ्वक्षरैककलिकैः पातैः सम्यक्प्रयोजयेत् ।
यथाक्षरं वर्धेष्वेतद्विज्ञेयं चापरान्तकम् ॥ २३२ ॥
आदौ कलोपवहनं विश्लेषाद्द्विगुणं भवेत् ।
द्विकले कलिकं ज्ञेयं द्विकलं चाप्युपोहनम् ॥ २३३ ॥
कलिकं कलिकं चेष्टं तथैव प्रत्युपोहनम् ।
एतदेव द्विगुणितं विज्ञेयं तु चतुष्कलम् ॥ २३४ ॥
लघ्वक्षरे तृतीये तु द्विर्भवेऽन्त्या कला स्मृता ।
व्यस्ततालसमुद्भूतं पातैः षड्भिर्विभूषितम् ॥ २३५ ॥
वस्तुशाखाख्यमित्येतदुदितं त्वपरान्तकम् ।
यथा शाखा तथैवास्य प्रतिशाखा विधीयते ॥ २३६ ॥
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता ।
शिरश्चैककलेनापि[1] कर्तव्यं पञ्चपाणिना ॥ २३७ ॥
वृत्तौ निवृत्तयोगश्च[2] गते वस्तुचतुष्टये ।
शाखायां प्रतिशाखायां विशेषः पश्चिमे त्वयम् ॥ २३८ ॥
षट्कलापातसंयुक्ते तालिके तु ततः स्मृतः ।
तथैककलयुक्तेऽस्मिन् विधिवत्पञ्चपाणिना ॥ २३९ ॥
यथाक्षरेणैव[3] भवेदनयोरुपवर्तनम् ।
उपोहनं तु वस्त्वर्धे[4] द्विकलं प्रत्युपोहनम् ॥ २४० ॥

---

पूर्ववद् पातविन्यासः षष्ठपञ्चमयोः स्मृतः ।
आवापक्षेप…युतं पातैरेभिश्चतुष्कलम् ॥
चतुष्कलैः पादभागैः षड्भिस्तु समलंकृतम् ।
वस्तुसंख्यश्च षट्पञ्चसप्तमान् संप्रयोजयेत् ॥
द्वितीये पञ्चमेऽन्त्ये च द्वे शम्ये समुदाहृते ।
तृतीये तु भवेदन्त्यं द्वितीये पञ्चमे स्मृतः ॥
आदौ षष्ठे तु ताल: स्यात् सन्निपातस्ततोऽन्तिमः ।
पूर्ववत्तु समुद्दिष्टः पाता क्षेपे चतुष्कले ।
…………योगो गदितः स्वापरान्तके ॥' एवङ्कोशटकमास्ते ।

१. '°कलेनापि' का. २. 'वृत्तौ निवृत्तयोगश्च' इत्यादि पद्यद्वयं का-पुस्तके नास्ति । ३. 'यथाक्षरे तु' का. ४. 'वस्त्वर्धे' का...

दक्षिणे तु तथा वृत्तौ चतुष्कलमपीष्यते ।
उल्लोप्यकं तु द्विगुरु द्विलघ्वन्ते गुरुर्ययोः ॥ २४१ ॥
शम्यातालौ द्विरभ्यस्तौ संनिपातोऽन्त्य एव च ।
प्रत्यक्षरकृतैः पातैः पञ्चभिः समलंकृतम् ॥ २४२ ॥
चतुरस्र(सं ?)स्तु (स ?)विच्छेदमेवं ज्ञेयं यथाक्षरम् ।
पूर्वोक्तेन विधानेन द्विचतुःकलमिष्यते ॥ २४३ ॥
अस्य चाङ्गत्रये गीते वैहायस(सि?)कमिष्यते ।
तदेकाङ्गपरं ज्ञेयं द्वादशाङ्गपरं तथा ॥ २४४ ॥
प्रमाणं द्वादशकलं तथापातमथापि च ।
अस्य तु द्विकला शम्या तालश्च द्विकलस्ततः ॥ २४५ ॥
द्विकलाश्च (च ?) पुनः शम्या तालश्चैककलः स्मृतः ।
ततः शम्या ततस्तालः संनिपातस्ततः परम् ॥ २४६ ॥
शाखे यैश्चशिखा (प्रतिशाखे ?)तु (स्या ?)नित्यमन्यपदा स्मृता ।
यदा ह्यस्य भवेदन्तस्तदन्ताहरणं बुधैः ॥ २४७ ॥
यथाक्षरेण नियमात्संहार्यं पञ्चपाणिना ।
स्वैतालेनात(न्त ?)हीनस्य संहारः (यैः ?) परिकीर्त्यते ॥ २४८ ॥
द्विमकारनिवृत्तश्च त्र्यंशो[16](शो ?)ऽथ त्रिविधस्तथा ।
त्र्यस्रश्च चतुरस्रश्च मिश्रश्चापि[17] प्रकीर्तितः ॥ २४९ ॥

---

१. 'दक्षिणे तु तथा वृत्तौ' इत्यादि पद्यार्धस्थाने का-पुस्तके—
'द्विकलं दक्षिणे कार्यं वृत्तौ चैव चतुष्कलम् ।
न चाप्रोपोहनं कार्यं शेषाणां तु कदाचन ॥
एवं चतुष्कले योगो मया प्रोक्तो पदान्तके ।' इत्येतत्सार्धमेकं पद्यम् ।
२. 'स्मृतम्' का. ३. 'चतुरस्रं समभेदं [illegible] ज्ञेयं यथाक्षरम्' का. ४. 'द्विचतुष्कल°' का. ५. 'अन्ते चाङ्गत्रयाद्गीते' का. [illegible] च' का. ७. 'स्मृतः' का. ८. 'द्वि[illegible] ९. 'द्विकलः स्[illegible] (?)' [illegible] ११. '°मतः परम्' [illegible] तु' प[illegible] १४. 'यथाक्षरेण [illegible] ।' का. १[illegible] स्मृतः'

स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।
स्यात्पञ्चपाणितालेन तदन्त्याहरणं यदा ॥ २५० ॥
तदा स्थितं भवेद्युग्मं तस्य पातविधिस्त्वयम् ।
शम्यापि द्विकला कार्या तालोऽपि द्विकलः स्मृतः ॥ २५१ ॥
चतुष्कलः संनिपातः प्रवृत्तमत इष्यते ।
अस्य तु द्विकला शम्या तथैवैककला पुनः ॥ २५२ ॥
चच्चत्पुटस्य तालादिः संनिपातस्ततः परम् ।
स्थितं तालेन कर्तव्यं महाजनिकमस्य तु ॥ २५३ ॥
निवृत्ततालः कर्तव्यः प्र(नि ?)वृत्तस्यापि तत्त्वतः ।
अत्र तालविधिः श्रेष्ठः प्रायः समुपवर्तनम् ॥ २५४ ॥
आसप्त(दावु ?)द्वृट्टे(ट्ट?)कः कार्यः परिवर्तक एव च ।
३
युग्मे हि मिश्रतालस्त्वायुग्मे ह्यन्तः प्रयुज्यते ॥ २५५ ॥
विव(वि?)धैककसंयुक्तपूर्वं पश्चाद्विधः स्मृतः ।
यथावदन्ततालोऽयं युग्मो मिश्रश्च कीर्तितः ॥ २५६ ॥
अतः परं प्रवक्ष्यामि त्र्यस्रतालविधिं प्रति ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥ २५७ ॥
त्रिकलः संनिपातश्च प्रवृत्तं चाप्यतः परम् ।
प्रवृत्तमस्य कर्तव्यं यथावत्परिवर्तनम् ॥ २५८ ॥

---

१. 'स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।' का. २. 'तथा' च. ३. 'तथास्थितं' का. ४. 'प्रथमस्य विधिस्त्वयम्' का. ५. 'तालश्च' का. ६. 'तस्यापि' च. ७. 'तालश्चैककल पुन.' का. ८. 'चचत्पुटस्य' का. ९. 'स्थिततालो न कर्तव्यो' का. १०. 'निवृत्तस्यापि' का. ११. 'स्थितमाहाजनिक्यो. प्रायः शाम्प्रवर्तनम् ।' का. १२. 'आदापुद्दहक' का. १३. 'तु' का. १४. 'युग्मोऽप्यन्तः प्रयुज्यते' का. १५. 'विविधैककसंयुक्त. सर्वथान्तविधिः स्मृत ।' च. १६. 'युग्मे मिश्रे च' का. १७. 'त्र्यस्रमन्तविधिं प्रति' का. १८. 'प्रवृत्तश्चा॰' का. १९. श्लोकोऽयं च पुस्तके
'अत परं प्रवक्ष्यामि त्र्यस्रमन्तविधिं पुनः ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥' इत्येवं श्लोकोऽधिकः ।
२०. 'प्रवृत्तमत्र कर्तव्यं' का.

यथा क(क्ष?)रप्रवृत्तेन विधिवैत्सञ्चपाणिना।[1]
आस्यो(?)पि स्थिततालेन महाजनिकमिष्यते ॥ २५९ ॥
निवृत्तताल: कर्तव्यस्तथात्र विनिवृत्तिमान्।[2]
युग्मौजमिश्रतालत्वान्मिश्रोऽप्यन्तःप्रवर्तनम् ॥ २६० ॥[3]
त्रिविधैकसंयुक्तः सर्वश्चान्तविधेः स्मृतः।[4-5]
व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ॥ २६१ ॥
तत्र युग्मं भवेद्‌व्यङ्गं त्र्य[ङ्गमेका?]ङ्गमेव च।[6]
प्रवृत्तमपि विज्ञेयं व्यङ्गमेकाङ्गमेव वा ॥ २६२ ॥
महाजनिकमेकाङ्गं त्र्यङ्गं संहरणं भवेत्।
स्थितादिकः प्रवृत्ताङ्ग एवमन्तर्विधं बुधैः ॥ २६३ ॥[7][8]
उल्लोप्यके सदा योज्यं ऊहापोहविशारदैः।[9]
प्रकरीवस्तुपपात्रं(?) पाताश्चैकान्नविंशतिः ॥ २६४ ॥[10]
वस्तुप्रमाणं कर्तव्यं तथैव च चतुष्कलम्।
आद्यमात्राद्वयस्यान्तः शम्यातालान्वितो भवेत् ॥ २६५ ॥
मात्रात्रयस्य चान्यस्य शम्यैका तु ततः स्मृता।
चतुर्थ्यां द्वादशस्तालः पञ्चम्यां चाष्टमः स्मृतः ॥ २६६ ॥[11][12]

१. 'यथाक्षरप्रयुक्तेन समासात्' का. २. 'अन्यापि' का. ३. 'प्रवृत्तः कालः कर्तव्यस्तथास्यान्तनिवर्तिते' का. ४-५. एतार्धद्वयी का पुस्तके नास्ति। ६. 'त्र्यङ्गमेकाङ्गमिष्यते' का. ७. 'स्मृतम्' का. ८. 'प्रवृत्तान्तमेवमन्तं विदुर्बुधाः।' का. ९. 'योज्यम्' का. १०. 'इतोऽग्रे का-पुस्तके 'प्रकरीवस्तुपपात्रं (?)' इत्यादि सार्धपद्यस्य स्थाने—

'वस्तु प्रयोगः कर्तव्यः प्रकुर्याद् द्विचतुष्कलम्।
न(नि?)यताक्षरयोगोऽत्र न चात्र द्विकलो भवेत् ॥
आद्यमात्रात्रयस्यान्ते शम्यातालौ प्रकीर्तितौ।
षण्मात्रं पातसंयुक्तं वस्तु कार्यं यथाक्रमम् ॥
उपोहनं तु वस्त्वर्धे प्रथमे च द्विजोत्तमाः।
शम्या अस्य तु मात्रा स्याद् द्वितीया तालसंयुता ॥' इति श्लोकत्रयी वर्तते।

११. 'षण्मात्रा' इति भवेत् का. १२. 'चान्त्या स्यात् शम्यैका च पुनस्त्रया।' का.

षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत्।
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ॥ २६७ ॥
शम्या तालश्च [तालश्च ?]शम्या तालस्तथैव च।
शम्यातालं[?]सनिपात इति वस्तु प्रकीर्तितम् ॥ २६८ ॥
यदा त्वर्धचतुर्थानि वस्तूनि मकरी भवेत्।
पश्चिमार्धे तदस्यैव तदर्धं प्राग्निवेशयेत् ॥ २६९ ॥
कनिष्ठासारितेनास्य कार्यं संहरणं ततः।
पादः पूर्वसमः कार्यस्त्वपरान्तकशाखया ॥ २७० ॥
उं(आ?)वेणके (को? )द्वितीयोऽपि तस्यैव प्रतिशाखया।
अनित्यः शीर्षको(कः? ) तालो माषघातस्ततः परम् ॥ २७१ ॥
मार्षघातो द्वादशकलस्तस्य पातविधिः स्व(स्त्र?)यम्।
कर्तव्या द्विकला शम्या तालो द्विकल एव च ॥ २७२ ॥
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः।
ततश्चैककलस्तालसनिपातः कलात्रये ॥ २७३ ॥
प्रायेण माषघातश्च विवं(वि ?)धाङ्गः प्रकीर्तितः।
संनिपातश्च पश्चार्ध कदाचिदुपवर्तनम् ॥ २७४ ॥
तस्य स्यात्कलिकेनैव तद्योध(?) पद्मपाणिना।
संधिर्यथाक्षरेणैवं कर्तव्यः पद्मपाणिना ॥ २७५ ॥
एकैकं विव(वि? )धो वापि तस्याङ्गं समुदाहृतम्।
अन्यस्य चतुरस्रस्य प्रवृत्तो(त्तौ?) या(यो?) विधि• स्मृतः ॥ २७६ ॥

१. 'शम्या तालश्च तालश्च' का. २. 'शम्याताल' का. ३. 'प्रकीर्तिते' का. ४. 'पश्चिमार्धेपदस्यैतत्तदार्धे' का. ५. 'तालः संवरणे गत' का. ६. 'आवेणको द्वितीयस्य तस्य च प्रतिशाखया।' का. ७. 'स एवं पातविन्यासो माषघातमतः परम्।' का. ८. 'पदघातो' का. ९. 'शम्या च द्विकला पुन' का. १०. 'एतदर्धं का-पुस्तके नास्ति। ११. 'तालः' का. १२. 'श्चैतु' का. १३. 'विविधाङ्ग.' का. १४. 'संधियेव हि तस्यान्ते' का. १५. एतदर्धं का-पुस्तके नास्ति। १६. 'यथाक्षरेणैव' का. १७. 'एकैकं त्रिविधो वापि' का. १८. 'तस्याङ्गे समुदाहृते' का. १९. 'अन्तस्य' का. २०. 'प्रवृत्ते' का.

[1]विव(वि?)धाङ्गेन तेनैव चतुरस्रकमिष्यते ।
संधिवद्वज्रतालश्च द्विधा संपिष्टकं [3]स्मृतम् ॥ २७७ ॥
[4]सशाङ्गं द्वादशकलं द्वादशाङ्गे तथैव च ।
निष्काममादितः कृत्वा शम्यास्तिस्रः प्रयोजयेत् ॥ २७८ ॥
[6]तालत्रयं ततश्चैव शम्यातालौ ततः परम् ।
शम्यातालौ ततः कार्यौ संनिपातोऽन्त्य एव च ॥ २७९ ॥
तु(आ?)वेणके तु सशाङ्गे संपिष्टकमिदं स्मृतम् ।
द्विशम्यातालयोगेन द्वादशाङ्गेऽपि चेष्यते ॥ २८० ॥
पाता नवैकादशं वा [11]संपिष्टकमुदाहृतम् ।
वज्र[12]वैखं(त्सं?)प्रयोक्तव्यमुपवर्तनमेव च ॥ २८१ ॥
युक्ता विव(वि?)धवृत्ता[13]भ्यां प्रवेणी द्विविधा स्मृता ।
पञ्चपाणिः प्रकर्तव्यौ (व्यः?) प्रवेण्या तु यथाक्षरौ[16] ॥ २८२ ॥
द्विकलो वापि मिश्रो वा प्रयोगोऽङ्गवशानुगः ।
अन्ते वास्याः प्रकर्तव्यः कदाचिदुपवर्तनम् ॥ २८३ ॥
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् ।
[18]द्वितीयपाततालेन ह्यपपातश्च कीर्त्यते ॥ २८४ ॥
वज्रतालेन कर्तव्यं क्रमं संहरणस्य तु ।
रोविन्दके तु षण्मात्राः पैताश्चैकान्नविंशतिः ॥ २८५ ॥

---

१. 'विधिनानेन' का. २. 'वज्रकालस्य' का. ३. 'संविष्टकं' का. ४. 'सशाङ्गैः' का. ५. 'द्वादशाङ्गैर्दशैव तु' का. ६. 'तालस्तत्र ततथैव' का. ७. 'शम्याताल.' का. ८. 'आवेणके' का. ९. 'संविष्टकमिति स्मृतम्' का. १०. 'नवैकदश वा' का. ११. 'संविष्टक०' का. १२. 'वज्रवत्संप्रयोक्तव्यं' का. १३. 'विविधवृत्ताभ्यां' का. १४. 'विविधा' का. १५. 'प्रकर्तव्य.' का. १६. 'यथाक्षरम्' का. १७. 'अङ्गं चास्य प्रकर्तव्यं' का. १८. 'द्विवीया तालपातेन' का. १९. 'अन्ताहरणमस्य तु' का. २०. 'पादभागेश्चतुष्कले.' का.

अर्घा[1](र्घे!)तीते (च!) मात्राणां पञ्चानां पात इष्यते ।
तालः[2] शम्यार्धतालश्च शम्यातालस्तथैव च ॥ २८६ ॥[3]
पञ्चानामपि मात्राणां विधिरेष यथाक्रमम् ।
चतुर्दशोऽपि[4] पञ्चम्या मात्रायां[5]स्ताल इष्यते ॥ २८७ ॥
चतुष्कलां(ला!) तु या[6] तुल्या षष्ठी[7] मद्रकमात्रया ।
इति[8] पादस्तथाष्टौ च कलापादादुपोहनम् ॥ २८८ ॥
ततश्चैव प्रयोक्तव्यं द्विकलं[9] प्रत्युपोहनम् ।
पातश्चैव[10] संनिपातश्च विव(वि!)धैकप्रयोजिताः ॥ २८९ ॥
वर्णानुकर्षोऽष्टकलः स्वरैः[11] प्रस्तार इष्यते ।
तुल्यवर्णोपनह्नो[12] द्वितीयः पाद इष्यते ॥ २९० ॥
शरीरताल(:!)[13]कर्तव्यः प्रकारोऽपि[14] विशेषतः ।
द्विकलेनैव कर्तव्यो विशेषात्पञ्चपाणिना ॥ २९१ ॥
कला द्वादश निर्दिष्टं प्रमाणं चास्य तत्त्वतः ।
रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम् ॥ २९२ ॥
विच(वि[15]!)धं वापि वृत्तं [वा!] तस्यादौ[16] परिकीर्तिता ।
आकारवृत्तपरुपोऽत्र[17]………………… ॥ २९३ ॥

---

१. 'अर्धेऽन्ते चैवमात्राणां' का. २. 'तालशम्या च तालश्च' का. ३. इतोऽग्रे का. पुस्तके—

'अन्ते शम्या तथा चैव सर्वासामपि कीर्तिता ।' इत्यधिकम् ।

४. 'चतुर्दशस्तु पञ्चम्या' का. ५. 'मात्रायां' का. ६. 'चतुष्कला तु तत्तुल्या' का. ७. 'षष्ठमन्द्रकमात्रया' का. ८. 'तथा चाष्टौ कलाः कार्याः प्रथमायामुपोहनम् ।' का. ९. 'प्रयोक्तव्यः द्विकल.' का. १०. 'पाताः स्युः संनिपातान्ताः विविधैकप्रयोजिता.' का. ११. 'अन्ते' का. १२. 'तुल्यवर्णोपवहनो' का. १३. 'शरीरतालः' का. १४. 'प्रस्तारोऽपि' का. १५. 'विविधो वा प्रवृत्तं वा' का. १६. 'प्राग्वरगतगम्यर् स्याचतुष्कं त्रिकमेव वा ।' का. १७. 'का पुस्तके तत्र—

'आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा ॥ ३९७ ॥' इत्यारभ्य,
'परिवर्ते तथैवास्य पुंवाक्यं प्राक् समाचरेत् ।
त्रिवाक्यं पुरुषश्चास्य चतुर्वाक्याङ्गना स्मृता ॥' ४८९ ॥
इत्यन्ता ९२ श्लोका अधिकास्तेऽप्यत्र द्रष्टव्याः—

'आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा ।
तस्योपरि यथेष्टं स्यात् अथस्यादङ्गयोजनम् ॥
अविशेषनिवृत्तं तु शीर्षकं तु प्रयोजयेत् ।
यथाक्षरेण तत्रैव कर्तव्यं पञ्चपाणिना ॥
आदावेकैकमन्तस्य प्रवृत्तो विषमो भवेत् ।
इति रोविन्दकः प्रोक्तः स्यादुत्तरमतः परम् ॥
उत्तरं संप्रवक्ष्यामि यथाविहितलक्षणम् ।
अस्येदमुत्तरस्याथ मुखं प्रतिमुखं भवेत् ॥
उल्लोप्यकपदस्यादौ मात्रा चैका चतुष्कला ।
रोविन्दकपदाकारगणवर्जः प्रयोजयेत् ॥
शाखा षडङ्गा लघ्वा द्वादशाङ्गा परा स्मृता ।
षट्पाता द्वादशकला शाखा ज्ञेया प्रमाणतः ॥
तस्यास्तु द्विकलस्तालः शम्या चैककला भवेत् ।
तथा च द्विकलस्तालः शम्या च द्विकला ततः ॥
पुनश्चैककलस्तालः सन्निपातः कलात्रये ।
शाखावत् प्रतिशाखा च भवेदन्यपदा तु सा ॥
अविशेषानिवृत्तस्याप्यस्यान्ते नियमो भवेत् ।
शीर्षकश्चैव कर्तव्यं अस्यान्ते पञ्चपाणिना ॥
पञ्चपाणिविधानेन प्रतिशाखा ततः परम् ।
द्विकलः पञ्चपाणिस्तु पूर्वपाकैर्यथाक्रमम् ॥
तालोऽयं दक्षिणे मार्गे सप्तरूपस्य कीर्तितः ।
॥ एव दक्षिणे कालः स वृत्तावपि चेष्यते ॥
चित्रेणैव हि सर्वत्र विशेषो यत्र नोच्यते ।
अर्थयोगादेष एव वृत्ततालविधिर्भवेत् ॥
उल्लोप्यकोत्तरमुखे हित्वा युग्मं तथैककम् ।
अर्थयोगस्तु तत्काले द्विकलः सम्प्रकीर्त्यते ॥
चतुष्कलः स्याद् द्विकलो द्वितीयश्च तथाक्षरः ।
रोविन्दकोल्लोप्यकयोर्मन्दकोत्तरयोस्तथा ॥

शरीरेषु विधिर्ज्ञेय ज्ञेयेषु प्रकृतिर्भवेत् ।
प्रकृतावपि तेषां स्यात् विकल्पेन चतुष्कलम् ॥
कालेनैव भवेद्वृत्तावर्धयोगश्चतुष्कले ।
वार्तश्चतुष्कलो योगो दक्षिणे स्यात् कदाचन ॥
मन्द्रकोऽप्यकयोर्मुखोपवहनेषु च ।
यो दक्षिणे तालविधिर्वृत्तौ स समुदाहृतः ॥
चित्रेष्वस्ते समस्ते वा तावुभौ परिकीर्तितौ ।
शाखानिवृत्तमन्यत्र चित्रेऽत्र प्रथमार्गिकः ।
इति मार्गत्रये ह्येतत् सप्तरूपं प्रकीर्तितम् ॥
द्विविधा प्रकृतिश्चास्य कुलकं छेद्यकं तथा ।
एकार्थं कुलकं तत्र पृथक्छेद्यकमिष्यते ॥
निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च ।
त्रिविधं चैव विज्ञेयं सप्तरूपं प्रयोक्तृभिः ॥
बहिर्गीताङ्गशाखाभिर्युक्तं निर्युक्तमिष्यते ।
बहिर्गीतविहीनं तु पदनिर्युक्तमिष्यते ॥
बहिर्गीतावहीनश्चाप्यनिर्युक्तमिति स्मृतम् ।
इत्येतत्सप्तरूपस्य प्रकृतं द्विविधं स्मृतम् ॥
प्रयोक्तं सप्तरूपं हि समवेताद् विनिःसृतम् ।
दैवताराधनं पुण्यमनन्तं गीतवादितम् ॥
सर्वेषामेवगीतानामन्तेषु च्छन्दकं स्मृतम् ।
चतुरश्रं ततस्त्र्यश्रं तथाश्रं युग्ममेव च ॥
आसारितापाणिकानां च प्रमाणानां तथैव च ।
अनेनैव विधानेन युग्मोजस्त्वं विभावयेत् ॥
यो गणः पूर्वमुद्दिष्टस्तस्यादौ तु कला भवेत् ।
चतुर्मात्राकृताश्चैव पदाः समवधारयेत् ॥
अष्टाङ्गा वा षडङ्गा वा युग्मौ यौ वा प्रमाणतः ।
इति युग्मे तु कर्तव्या आन्तिकी चैव पाणिका ॥
चतुष्पादा तथैवाङ्गा व्यङ्गा त्र्यङ्गा विभावयेत् ।
अतैर्व्यस्तैः समस्तैर्वा युग्मौ यौ वा प्रकीर्तितौ ॥
तस्य रूपस्य तालोऽयं मया हि परिकीर्तितः ।
चतुरश्रा तथा त्र्यश्रा ध्रुवा ज्ञेया प्रयोक्तृभिः ॥
वार्गा तालविधानं तु पदप्रमाणं समासतः ।

अङ्किता चोरिता चैव चतुरस्रा प्रमाणतः ॥
चतुर्भिः संनिपातैश्च ज्ञेया चचत्पुटा स्मृता ।
सुप्रतिष्ठावसानानां संनिपातेऽन्त इष्यते ॥
अपकृष्टा स्मृता त्र्यस्रा तथा चापपुटाश्रिता ।
चतुर्भिः संनिपातैश्च युक्तो पादान्तमिश्रिते ॥
तथाकाशगृहस्तासां तालश्चचत्पुटः स्मृतः ।
विलम्बिता च त्र्यस्रा च स एतद्वितयान्विता ॥
निष्कामादिप्रयुक्तेन योज्या चापपुटेन तु ।
पादान्ते संनिपातस्य द्विकलेन यथाविधि ॥
शीर्षकाणि च योज्यानि द्विविधं पद्मपाणिना ।
चतुर्भिः संनिपातैश्च सम्यक्पादान्तसंस्थितैः ॥
पादान्तस्यान्ततालस्य द्विमात्रान्त्यं प्रयोजयेत् ।
मात्राद्वयं च काले तु झंकारो समतां नयेत् ॥
किंचिद्विनातिरिक्तायां मात्राभिर्यत्र चैककला ।
स्यात्समलं नयेत्तां तु क्षयवृद्ध्या प्रयोगवित् ॥
वर्णप्रकर्षेण च स्यात् तालानामपि वर्धनम् ।
स्यात् झंकारो नियुक्तानां अक्षरे च कलान्तरम् ॥
कलातालप्रमाणेन यस्मात् शुष्ककदुद्गतात् ।
तथा ध्रुवाणां सर्वेषु कलातालं प्रयोजयेत् ॥
भङ्गतालश्च कर्तव्यो नत्कुटानां यथाविधि ।
कलापातेन संयुक्तस्तालश्चचत्पुटो भवेत् ॥
एष एव पुनस्त्र्यस्र खञ्जखेलेति चेष्यते ।
पुनः प्रकृतयो होष भङ्गस्त्राक्रीडितो भवेत् ॥
यान्यङ्गानि ध्रुवासु स्युर्ध्रुवास्तथ भवन्ति हि ।
तानि अष्टकयोगेन योजयेत् षट्कलेन वा ॥
एवमेव मया तालो ध्रुवाणां परिकीर्तितः ।
चतुष्पादावसाने तु सम्प्रवक्ष्यामि लक्षणम् ॥
यद्वेव्यकुसुमावाद्यः(?) शृङ्गाररससंश्रयः ।
वृत्तं विकल्पितं तस्य काललक्षणमुच्यते ॥
नारीप्रयोज्यं न ज्ञेयमाश्रितं तु चतुष्पदम् ।
त्र्यस्रा वा चतुरस्रा वा द्विविधा वा चतुष्पदा ॥
एकस्या वा बहूनां वा द्वयोर्वा वाक्ययोजनात् ।

तथा शृङ्गारभूयिष्ठा त्रिविधा स्याच्चतुष्पदा ॥
प्रवृत्तसंज्ञा विज्ञेया तथा च स्थितसंश्रया ।
स्थितप्रवृत्तिसंज्ञा च त्रिविधा स्यात् पुनश्च सा ॥
निष्कामश्चैव शम्या च तालशम्या तथैव च ।
ततोत्तमश्च निष्कामः सन्निपातस्तथान्तिमः ॥
अष्टाविंशतिकल्पा तु बुधैर्ज्ञेया चतुष्पदा ।
तस्या विकल्पान् वक्ष्यामि यथावदनुपूर्वशः ॥
प्रवृत्ताख्या द्रुतलया स्थिताख्या च विलम्बिता ।
स्थितप्रवृत्तसंज्ञा च ज्ञेया मध्यलयाश्रिता ॥
ज्ञेयश्चचत्पुटस्तस्य तथा चापपुटः पुनः ।
द्विकलेन विधानेन तस्य चापविधिस्त्वयम् ॥
बह्वक्षरा च विपुला मागधी चार्धमागधी ।
समाक्षरपदा चैव तथा च विषमाक्षरा ॥
तस्यास्त्वन्तापहरणा विज्ञेया चाप्यनीकिनी ।
अवसानापहरणा अन्तापहरणा तथा ॥
अभ्यन्तरापहरणा तथा चैवार्धनर्कुटा ।
अर्धसंज्ञा च मिश्रा च तथा चैवान्तगीर्वका (?) ॥
एकावसाना विज्ञेया तथा च नियताक्षरा ।
अर्धप्रवृत्ते एतासां लक्षणं श्रूयतामिदम् ॥
व्यक्तवाक् या लघुप्राया स्वल्पक्षरसमन्विता ।
द्रुतपादया द्रुतलया ज्ञेया बह्वक्षरेति सा ॥
गुरुप्लुताक्षरप्राया स्वल्पवाक्या यदा तथा ।
त्रिलया पृथुलाख्या च सुकुमारविधौ स्मृता ॥
त्रिलया त्रियतिश्चैव नियताक्षरान्विता ।
एकविंशतितालाच्च मागधी सम्प्रकीर्तिता ॥
गुरुलध्वक्षरकृता द्रुतमध्यलयान्विता ।
मागध्येवार्ध(र्धे?)ताले च युक्ता स्यादर्धमागधी ॥
गुरुलघ्वसमाभिः पदैर्वर्णैस्तथैव च ।
लयतालैः समैश्चैव समाक्षरपदा स्मृता ॥
अक्षरैर्विषमायां तु मात्रापादैस्तथैव च ।
लयतालैरनियमा सा ज्ञेया विषमाक्षरा ॥

स्यात्त्वन्त्यः संनिपातश्च स्या(सा?)नुस्वारोऽन्त्य इष्यते ।
समाद्यन्तापहाराणां सानुस्वारकृता तथा ॥
मध्याद्यन्तैः संनिपातैरनुस्वारकृताक्षरैः ।
शेषैरनिलया पादैर्विज्ञेया सा लनीकिनी ॥
अवसानापहरणा नित्यं ज्ञेयाऽमिताक्षरा ।
अनुस्वारहृता चैवमन्तापहरणा स्मृता ॥
द्वितीया संनिपातेन मध्येऽक्षरसमन्विता ।
अभ्यन्तरापहरणा सानुस्वारेव सा स्मृता ॥
अर्धेन भिद्यते या तु विज्ञेया सार्धनर्कुटा ।
त्र्यस्रा त्वनेन विधिना त्वर्धखण्डेन कीर्त्यते ॥
खञ्जनर्कुटनाभ्यां तु मिश्रभावो यदा भवेत् ।
त्र्यस्रा वा चतुरस्रा वा तदमिश्रेव कीर्त्यते ॥
उपश्लेषेण यस्यास्तु स एवार्थः समाप्यते ।
शीर्षकं सा तु विज्ञेया शीर्षितेन विभूषिता ॥
एकपादावसानस्तु यस्य स्यादर्धवर्णतः ।
एतावसानेव बुधै. सा ज्ञेया तु चतुष्पदा ॥
पूर्वपादेन तस्य स्यात् सर्वेन गुरुलाघव. ।
पादे पादावसाने च सा ज्ञेया नियताक्षरा ॥
यस्या स्थितप्रवृत्तं वा अवसर्धनिवेशितम् ।
अर्धप्रवृत्ता सा तु स्यादुभाभ्यामपि वा कृता ॥
निष्क्रामश्चैव शम्या च ताल शम्या तथैव च ।
आवाप. संनिपातश्च षडस्या मातृकाः स्मृता. ॥
उपोहनं तु त्रिविधं सुकुमारे प्रकीर्तितम् ।
द्व्यवरं त्र्यवरं तस्य कलाभि प्रत्युपोहनम् ॥
विकलाद्यं चान्तकलं संनिपातपरं स्मृतम् ।
संनिपातापहरणा आदौ मध्येऽन्ततोऽपि वा ॥
वाक्यद्वयाभिनिष्पन्ना नानावाक्यापि सा स्मृता ।
एकपादा द्विपादा वा त्रिपादा च प्रकीर्त्यते ॥
चतुष्पादापि वा भूत्वा नातः परमिहेष्यते ।
कृता तु पादबहुला न शोभां जनयिष्यति ॥
वर्णस्य प्रकृतिर्न्यद्वाक्यस्थिर्हि···स्यति ।
तस्मात्स्थिता स्याद् द्विपदा ह्येकेनैव पदा स्मृता ॥

चतुष्पदा प्रवृत्ता तु सम्यक् प्रोक्ता प्रयोक्तृभिः ।
तत्रैकरूपैकपदा स हि पादपता(दा?) स्मृता ॥
षट्त्रिंशत्परमा सा हि सन्निपातपदा भवेत् ।
आभ्यामूर्ध्वप्रमाणे तु त्रिपादः परिकीर्त्यते ॥
सन्निपातप्रमाणेन ज्ञेयो मध्यलयस्तथा ।
लास्यमित्येव यत्पूर्वं मया वः परिकीर्त्तितम् ॥
लक्षणं तस्य वक्ष्यामि प्रयोगञ्च यथाक्रमम् ।
लासनाल्लास(स्य?)मित्युक्तं स्त्रीपुम्भावसमाश्रयम् ॥
भाणवत् चक्रहास्यं स्याद्वहवस्तु(?) च तद्भवेत् ।
एकार्थं पृथगर्थं वा तदङ्गेषु प्रकीर्त्तितम् ॥
अङ्गानि दश चैवास्य तेषां वक्ष्यामि लक्षणम् ।
गेयपादं स्थितं पाठ्यं आसीनं पुष्पगन्धिका ॥
प्रच्छेदका(कः?) त्रिमूढश्च सैन्धवाख्यं द्विमूढकम् ।
उत्तमोत्तमकं चैव विचित्रपदमेव च ॥
उक्तप्रत्युक्तभावश्च लास्याङ्गानि प्रकीर्त्तिताः ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणं ॥
आसीनकाख्यं योऽयं स्यात् प्रयत्नादासनस्थया ।
स्थितपाठ्यञ्च भौमीभिः···चारीभिर्युतम् ॥
नृत्तकाले च वाद्ये च गृहमोक्षे तथैव च ।
गीताङ्गानां विधिर्यः स्यात् स लास्यो प्रायशः स्मृतः ॥
अङ्गान्येतानि लास्ये स्युर्दशोक्तानि समासतः ।
एतेषां चैव वक्ष्यामि प्रयोगं लक्षणं तथा ॥
स्थापितेऽथाण्डकिन्यासैः पटे चैवापकर्षिते ।
बृंहणः पूर्ववर्षेषु चासने परिकल्पिते ॥
मार्दङ्गेषु मृदङ्गेषु त्रिसाम्नि प्रतियोजिते ।
प्राक् शुष्कासारितं कार्यं तन्त्रिवेणुप्रयोजितम् ॥
मार्गसारितताडेन ततश्चासारितं बुधैः ।
परिवृत्तैस्त्रिभिर्युक्तमतश्चोपोहनं भवेत् ॥
त्र्यस्रेण विकटेन स्यात् ततश्च परिधानकम् ।
प्रयोक्तव्यं प्रयोगज्ञैः परिवर्त्तात्मकं तथा ॥
परिवर्ते तथैवास्य पुंवाक्यं प्राक् समाचरेत् ।
स्त्रीवाक्यं पुरुषश्चास्य चतुर्वाक्याङ्गना स्मृता ॥

त्रिवाक्यं [पुरुषश्चास्?] (स्यात्) चतुर्वाक्यं गता स्मृता।[1]
कार्यं तथा निर्वहणं प्रत्येकं परिधानके[2] ॥ २९४ ॥
इत्येतत्प्रथमं स्वङ्गं[3] लोके गेयपदं स्मृतम्।[4]
स्थितपा(वा?)चस्यं[5] वक्ष्यामि विधानं चाप्यतः परम् ॥ २९५ ॥
वृत्तमेकप्रथमे द्वे[6] योजयेत्पञ्चपाणिना।
ततः परं ते भूयोऽपि युग्मतालेन वा स्मृते[7] ॥ २९६ ॥
अवसानं तु कर्तव्यं त्व(च?)रितं पञ्चपाणिना।[8]
द्विकलेनेति कर्तव्यं स्थितपाठ्यं प्रयोक्तृभिः[10] ॥ २९७ ॥
उपोह्य तालं व्यस्तं वा वृत्तैर्या तैस्तैः समैस्तथा।
आसीनपा(वा?)द्यं युञ्जीत सर्वैर्भावैस्तु पौरुषैः[12] ॥ २९८ ॥
एवं चतुर्भिः पादैस्तु समैरर्थवशानुगैः।[14]
आसीनपा(वा?)द्यं कर्तव्यं विधिवत्पञ्चपाणिना ॥ २९९ ॥[15]
अतीतयुग्मतालेन श्लोकैः[16] कार्यस्ततः परम्।
अष्टादश द्वादश वा पदानि तु[17] ततः पुनः ॥ ३०० ॥

१. 'चतुर्वाक्यात्मना स्मृता' का. २. 'प्राश्यर्थं' का. ३. 'खाङ्गं' का. ४. 'गेयपादमिति स्मृतम्' का. ५. 'स्थितवाचस्य' का. ६. 'वृत्तमेकमथ द्वे वा' का. ७. 'अतः परं च द्वे भूयः खञ्जिते सम्प्रयोजयेत्' का.

८. 'चञ्चत्पुटेन कर्तव्या द्विकलेन ततः परम्।
यथाक्षरेण चायुक्ता सन्निपातैस्तथाष्टभिः ॥' इति पद्यमधिकमत्र।

९. 'अवसाने तु कर्तव्यं चरितं पञ्चपाणिना।' का. १०. 'योक्तव्य स्थितवाचप्रयोक्तृभिः।' का.

११. 'बृहत्पादपदैः समैः' का. १२. 'आसीनवाद्यं युञ्जीत भावैः सर्वैश्च पौरुषैः।' का. १३. 'गेयं' का. १४. '°रर्थपरानुगैः°' का. १५. अस्यार्धस्य स्थाने का. पुस्तके तु—

'आसीनवाद्ये कर्तव्यः प्रयोगः शीर्षकस्य तु।
अष्टभिः सन्निपातैश्च युक्तं तालादिनैव तु ॥
अथाक्षरप्रवृत्तेन विधिवत् पञ्चपाणिना।' इति सार्धं पद्यम्।

१६. 'श्लोकः' का. १७. 'च' का.

[1]कुर्यात्तु(दु ?)चरतालेन ताले निर्वहणं बुधः ।
एतदासीनपा(वा ?)[2]द्यस्य विधानं परिकीर्तितम् ॥ २०१[3] ॥
स्यात्पुष्पगण्डिका[4] नाम यदङ्गं तन्निबोधत ।
तत्रैकं पौरुषं श्लोकं समवृत्तं प्रयोजयेत् ॥ २०२ ॥
[5]चतुर्भिः संनिपातैश्च ज्ञेयं चच्चुपुटाश्रयम् ।
पादे पादे तथैवं च वाद्यं नृत्तं तथैव च ॥ २०३ ॥
ततश्चान्ये स्मृतं वृत्ते खञ्जनर्कुटसंज्ञिते ।
अन्ते निर्वहणे चास्य शीर्षकं पद्मपाणिना ॥ २०४ ॥
[6]आविद्धशर्याङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ।
ज्योत्स्नायां मन्दिरायां[7] वा सलिले दर्पणेऽपि वा ॥ २०५[8] ॥
[9]छायासुदृशकान्तस्य प्रहर्ष्यैव विभूषितम् ।
[10]नृत्तं प्रसादक्रीडायां हेलादिभिरलंकृतम् ॥ २०६ ॥
[11]अङ्गप्रस्वेदकं तत्राविन्द्यालास्यं प्रयोगवित् ।
चच्चपुटस्य लोलेन[12] तस्य प्रक्रीडितं भवेत्[13] ॥ २०७ ॥
मात्रावृत्तसमैः पादैः श्लोक[14]बन्धो भवेदथ ।
[15]बह्वक्षरार्धसंयुक्तं तोटकं पद्मपाणिना ॥ २०८ ॥

---

१. 'कुर्याद्दुत्तरतालेन ततो निर्वहणं भवेत्' का. २. '°वाद्यस्य°' का.
३. श्लोकोऽयं का. पुस्तके—
'विचित्रवृत्तसंयुक्तं पुंस्त्रियोर्गतिचेष्टितैः ।
अन्योन्यान्तरिते नित्यगीतवाद्येन भूषितम् ॥
पदेपदेऽङ्गहारैश्च पाठेन च समन्वितम् ।' एतदधिकं सार्धं पद्यम् ।
४. 'स्यात् पुष्पगन्धिकानाम' का. ५. 'चतुर्भिः संनिपातैश्च' इत्यादिपद्यद्वयं का. पुस्तके नास्ति । ६. 'अयं द्विपत्तुपच्छेदविपलास्यप्रयोगवित् ।' का. ७. 'मन्दिरे वा पि' का. ८. 'दर्पणेऽपवा' का. ९. 'छाया येदस्य कान्तस्य प्रदर्पनि विभूषितम् ।' का. १०. 'वृत्तप्रधानं क्रीडायां' का. ११. एतदर्धं का. पुस्तके नास्ति । १२. 'भेदेन' का. १३. 'स्मृतम्' का. १४. 'संनिपातैस्त्रिपञ्चभिः' का.
१५. 'बह्वक्षराभिः संयुक्तं' का.

द्विकलेन प्रकर्तव्यं मिश्रेणैककलेन वा।
[1]प्ररोचकं च कर्तव्यं गुरुप्रायोक्षरान्वितम् ॥ ३०९ ॥
यथाक्षरेण व्यसेण संनिपातैस्तथाष्टभिः।
विव(वि?)धैककसंयुक्तं कैशिकी[2]जातिमाश्रिता ॥ ३१० ॥
[3]व्यङ्गविच्छेदकं विन्याद्युक्तं प्रक्रीडितादिभिः।
अनिष्ठुरश्लक्ष्णपदं गान्धारीजातिमाश्रितम् ॥ ३११ ॥
चच्चत्पुटेन योक्तव्यं (नि)त्रिमूढं[4][द्वि?]कलेन तु।
चतुःषष्टिः संनिपातास्तस्मिंश्चैव प्रकीर्तिताः ॥ ३१२ ॥
यथामार्गकलोपेता विदारी[5] विव(वि?)धान्वितः (ता?)।
अङ्गहारान्[6]सविष्कम्भात्सैव चात्र प्रयोजयेत् ॥ ३१३ ॥
केवलं पौरुषैर्भावैर्वाद्यं[7] नाँश्वापि तेन यत्।
नर्कुटं[8] खञ्जकं चैव त्रिविधं न प्रयोजयेत्[9] ॥ ३१४[10] ॥
सैन्धवीमाश्रितं भाषां ज्ञेयं सैन्धवकं बुधैः।
रूप[11]वाद्यादिसयुक्तं युग्मतालकृतं तथा ॥ ३१५ ॥
[12]वितस्तालिसमार्गेण[13] सैन्धवं वाद्यमिष्यते।
न पाठ्यं[14] स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः ॥ ३१६[15] ॥

---

१. 'शीर्षकं च प्रकर्तव्यं गुरुप्रायाक्षरान्वितम्' का. २. 'कैशिनी' ख., 'कैशिकी॰ जातिसंश्रयम्' का. ३. 'अङ्ग' ख., 'अङ्गप्रच्छेदकं कुर्यात्' का. ४. 'त्रिमूढं द्विकलेन तु' का. ५. 'विदारी विविधान्विता' का. ६. 'अङ्गहाराः ।' का. ७. 'वाद्यं नाव्यसु(?)तं नयेत्' का. ८. 'नरकुटं' का. ९. 'विधाने संप्रयोजयेत्' का. १०. इतोऽग्रे का. पुस्तके—

'इति त्रिमूढमुद्दिष्टं नानारससमाश्रयम्।
नातिस्पष्टाङ्गहारं तु नातिरेचितभूषितम् ॥' श्लोकोऽयमधिकः।

११. 'रूपवाद्यादिसयुक्तं सैन्धवं स्याद्योद्धतम् ।' का. १२. 'एतदर्धं का. पुस्तके पौर्वापर्येणास्ति १३. 'वितस्तालिप्तलेशाढ्यं' का. १४. 'नपाद्यं' का. १५. इतोऽग्रे का. पुस्तके—

मुखप्रतिमुखोपेतं तथा चञ्चुपुटाश्रयम् ।
यथाक्षरैः संनिपातैस्तथा द्वादशभिर्युतम् ॥ ३१७ ॥
ने(नै ?)कयुक्तिविचित्रार्थं पौरुषं भावमाश्रितम् ।
एकाङ्ग(ङ्गं ?) शीर्षकं गत्योद्धिमूपं(मूढं ?) परिकीर्तितम्
उत्तमोत्तमके त्वादौ नर्कुटं संप्रयोजयेत् ।
श्लोकं विचित्रार्थपदं तदा चैवोपपादयेत् ॥ ३१९ ॥
ततश्च वस्तुकं कार्यमपरान्तकशाखया ।
यथाक्षरेण कार्यं तु शीर्षकं पञ्चपाणिना ॥ ३२० ॥
उत्तमोत्तमकं प्रोक्तं हेलान्नृत्तविभूषितम् ।
कोपप्रसादबहुलं सवि(साधि ?)क्षेपैरुपकमैः ॥ ३२१ ॥
संलापरचितैर्नित्यमुत्कमत्युक्तमिष्यते ।
वेणार्धेन प्रकर्यास्तु तस्य वा (ता?)लविधिः स्मृतः ॥ ३२२ ॥
ततस्तु शीर्षकं कार्यं सयुक्तं पञ्चपाणिना ।
उत्कमत्युक्तमेवं हि यथोक्तं परिकीर्तितम् ॥ ३२३ ॥

एवमेतद्बुधैर्ज्ञेयं मार्ग(नं ?) तालप्रमाणतः ।[2][3]
तद्गाथापाणिकादीनां सस्वरूपं प्रकीर्तितम् ॥ ३२४ ॥[4]
यस्तु तालं न जानाति न स गा[ता ?] न वादकः ।[5]
तस्मात्सर्वप्रयत्नेन कार्यं तालावधारणम् ॥ ३२५ ॥
अङ्गभूता हि तालस्य यतिपाणिलयाः स्मृताः ।[6]
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिते ॥ ३२६ ॥[7][8]
छन्दोक्षरपदानां हि समत्वं यत्प्रकीर्तितम् ।[9][10]

१. इतः पूर्वं का. पुस्तके—
'दशाङ्गं लास्यमित्येतन्मया वः परिकीर्तितम् ।
प्रकरणे द्वादशाङ्गानि तथैव च भवन्ति हि ॥
षडङ्गार इति विज्ञेयो लास्यच्छेदे विपर्ययात् ।' इत्यधिकं सार्धं पद्यम् ।
२. 'गीततालविकल्पनम्' का. ३. इतोऽग्रे का. पुस्तके—
'ततः कार्यः प्रयत्नस्तु नाट्यताले प्रतिष्ठितः ।
सर्वस्यैव हि नाट्यस्य आतोद्यानां तथैव च ॥
ततः कालेन संयुक्तो भवेन्नित्यं प्रमाणतः ।
क्षीणं प्रकृष्टवर्णं वा गानं तालेन धार्यते ॥
तस्मादेतत् प्रयत्नेन विज्ञातव्यं प्रयोक्तृभिः ।' इत्यधिकमत्र सार्धं श्लोकद्वयम् ।
४. 'अङ्गगाथा पाणिका चैव सस्वरूपं प्रकीर्णकम् ।
— — चतुष्पदा वर्धमाने ताले चैव विभाव्यते ॥'
५. का. पुस्तके ॥ पूर्वोत्तरार्धयोः पौर्वापर्यम्—का.
'तस्मात् पूर्वं प्रयत्नेन कार्यं तालावधारणम् ।
यस्तु तालं न जानाति न स गाता न वादकः ॥' इति ।
६. इतोऽग्रे का. पुस्तके—
'पूर्वोक्तं नै विधानं च तच्च मे सन्निबोधत ।' इत्यर्धमधिकम् ।
७. 'लयाश्च' का. ८. '॰विलम्बिताः' का. ९. 'इतः पूर्वं' का. पुस्तके—
'मार्गेषु व्यक्तिमायान्ति गीतं(तं?)वाद्योभयात्मकम् ।
विरतस्तु यतमध्यान्या मार्गेषु लयसंश्रया ।
समा स्रोतोगता चैव गोपुच्छेति यथाक्रमम् ॥
पादवर्णप्रकर्षाणामक्षराणामथापि च ।
नियमे या यतिः सा तु गीतवाद्यादिभिः स्मृता ।'
इत्यधिकमत्र सार्धं पद्यद्वयम् ।
१०. 'तु समत्वं यत्र कीर्तितम्' का.

कलाकलान्तरकृतः[1] स लयो मौन(नाम ?)संज्ञितः[2] ॥ ३२७ ॥
स्रोतोगता[3] च गोपुच्छा समा(?) चात्र विधाय च ।
निलयत्र(?)भृत्यवर्णानामक्षराणामथापि वा[4] ॥ ३२८ ॥
नियमौ(मो?) योयतिः स्यात्तु गीतवाद्यसमाश्रया ।
समपाणिश्च[5] विज्ञेयो ह्यवपाणिस्तथैव च ॥ ३२९ ॥
तथैवोपरिपाणिश्च गीतवाद्यसमाश्रयः ।
लये[6] नयं समं वाद्यं समपाणिः प्रकीर्त्यते ॥ ३३० ॥
ध्रुवाद्यदयकृद्यं स्यात्सोऽर्धपाणिः प्रकीर्तितः ।
लयस्योपरि यद्वाद्यं पाणिः स उपकीर्त्यते ॥ ३३१ ॥
ततः स्थितलयो यो वै संनिपातो विधीयते[7] ।
स[8] तु मध्यलयमाप्यसंनिपातद्वयं भवेत् ॥ ३३२ ॥॥

१. 'कृतं' का. २. 'नाम संज्ञितः' का. ३. का. पुस्तके तु पद्यार्धस्यास्य स्थाने—

'आद्यन्ते चैव मध्ये च लयवर्णपदैः समा ।
वाद्यप्रधानभूयिष्ठा चित्रा ज्ञेया समा यतिः ॥
क्वचिद्वेगवाद्यविष्टेत क्वचिच्चैव प्रधावति ।
वाद्ये श्रुतप्रधा(?)दतो ज्ञेया स्रोतोगता यतिः ॥
गुरुभिर्लघुभिश्चैवमपि भावितमक्षरम् ।
लम्बिता येन भूयिष्ठा गोपुच्छा दक्षिणे यतिः ॥' इति पाठः ।

४. एतत्पद्यं का. पुस्तके नास्ति ।

५. 'समपाण्यवपाणिश्च तथा च परिपाणिकम् ।
यदुपान्त्यक्षराणां च समवायो लयो भवेत् ॥' इति का.

६. का. पुस्तके सार्धपद्यस्यास्य स्थाने—
'लयात् प्रवृत्ति एतेषां प्रमाणं परिवर्तते ।
गतिः कल्याद्य(?)तु शेषेष्वन्येषु पाणिषु ॥' इति वर्तते ।

७. 'भवेदप' का. ८. इतः प्रभृत्यध्यायसमाप्तिपर्यन्तं सार्धपद्यद्वयस्यास्य स्थाने का. पुस्तके—

'गुरुमध्यचलं प्राप्य संनिपातचतुष्टयम् ।
सा तत्र चान्तरकल्य इति एव लयो हि सः ॥

रुतं चापि लयं प्राप्य संनिपातचतुष्टयम्।
यावत्तत्रान्तरकृता हृ(द्रु?)तमध्यलयो हि सः ॥ ३३३ ॥
सोऽर्धपाणिस्तु विज्ञेयास्त्वन्यैर्हृ(द्रु?)तलयाश्रयाः।
अत ऊर्ध्वं प्रमाणं तु कलानां न विधीयते ॥ ३३४ ॥

इति भारतीये नाट्यशास्त्रे तालविधानो नामाध्याय एकत्रिंशः।

---

द्वात्रिंशोऽध्यायः।

ध्रुवासंज्ञानि तानि स्युर्नारदप्रमुखैर्द्विजैः।
गीताङ्गानीह सर्वाणि विनियुक्तान्यनेकशः ॥ १ ॥
या ऋचः पाणिका गाथा सप्तरूपाङ्गमेव च।
सप्तरूपप्रमाणं च तद्ध्रुवेत्यभिसंज्ञितम् ॥ २ ॥
एभ्यस्त्वङ्गान्यथोद्धृत्य नानाछन्दःकृतानि च।
काव्यत्वं यानि गच्छन्ति तानि वक्ष्याम्यहं द्विजाः ॥ ३ ॥
मुखं प्रतिमुखं चैव वैहार्यस(सि?)कमेव च।
स्थितप्रवृत्ते वज्रं च संधिः संहरणं तथा ॥ ४ ॥

---

सोपपाणिस्तु विहेयस्त्वज्ञैर्द्रुतलयाश्रयः।
मध्ये च यान्तरकला द्रुकुले(?) च या ॥
उपर्युपरिपाणिश्च सज्ञो यो वाद्यसंश्रय.।
अत ऊर्ध्वं कलानां तु प्रमाणेन विधीयते ॥
यतमः पाणयश्चैव लयाश्चैव प्रयोक्तृभिः।
यथाक्रमं हि कर्तव्यं गीतयुक्तिमवेक्ष्य च ॥
एवं ध्रुवातालविधिः कर्तव्यो गानयोगतः।
अत ऊर्ध्वं प्रवक्ष्यामि ध्रुवाणामङ्गकल्पनम् ॥
इति भारतीये नाट्यशास्त्रे तालव्यञ्जको नाम एकत्रिंशोऽध्यायः।

१. ध्रुवेति संज्ञितानि' का. २ 'यान्यङ्गानीहमुखेषु तानि मे संनिबोधत' का. ३. 'षष्ठरूपं' का. ४. 'हि' का. ५. 'सा ध्रुवेत्यभिसंज्ञिता' का. ६. '°स्तत्रेभ्य' का. ७. 'ध्रुवाङ्गं' का. ८. 'वैहायसिकमेव च' का. ९. 'स्थिरप्रवृत्ते वज्रश्च' का.

प्रसारो[1] मापघातः स्यादुपवर्तनमेव च ।
उपघातः[2] प्रवेण्यौ च चतुरस्रं सुशीर्षकम् ॥ ५ ॥
संपि(वि?)ष्टका(ता?)न्ताहरणे[3] माहाजनिकमुच्यते[4] ।
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ॥ ६ ॥
एकवस्तु[5] ध्रुवा ज्ञेया द्विवस्तुपरिगीतिकाः ।
प्रिय(त्रिव?)स्तु मद्रकं ज्ञेयं चतुर्वस्तु चतुष्पदा ॥ ७ ॥
वाक्यवर्णा[6] ह्यलंकारा यतयः पाणयो लयाः ।
ध्रुवमन्योन्यसंबद्धा[7] यस्माद्यस्माद्ध्रुवा स्मृताः(ता?) ॥ ८ ॥
ध्रुवास्तु[8] पञ्च विज्ञेया नानास्थानसंश्रयाः[9] ।
एतासां[10] संप्रवक्ष्यामि ससरूपाङ्गकारणम् ॥ ९ ॥
मौवि(वे?)शिक्या स्मृतं तत्र प्रदृत्तं सोपवर्तनम् ।
वज्रं च शीर्षकं चैव शीर्षकार्धं[11] विनिर्दिशेत् ॥ १० ॥
प्रस्तारो मापघातश्च माहाजनिकमेव च ।
प्रवेणी ह्यवतापर्धं अर्द्ध(र्द्धि?)तायां तथैव च ॥ ११ ॥
सुखप्रतिमुखोपेता ह्यवकृष्टाभिधीयते ।
वैहायसस्त्वाहरणे स्थितायां संप्रकीर्तितौ ॥ १२ ॥
संहारश्चतुरस्रं[13] च सञ्जनर्कुटके तथा ।
संधिः प्रस्तारसंयुक्तस्त्वन्तरायां प्रकीर्तितौ[14] ॥ १३ ॥
यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु[15] ।
तानि छन्दोगतैर्वृत्तैर्विमार्ग्यन्ते[16] ध्रुवास्तथा ॥ १४ ॥

---

१. 'प्रस्तारश्चोपवर्तश्च मापघातस्तथैव च ।' का. २. 'चतुरस्रावपाते च प्रवेश्यौ शीर्षकं तथा ।' का. ३. 'संविष्टतान्ताहरणे' का. ४. '°मेव च' का. ५. पद्यमेतत् प. पुस्तके नास्ति । ६. 'ध्रुववर्णा ह्यलंकारा तथा यत्योपपाणयः ।' का. ७. 'अपरस्परसंबद्धा यस्मात्तस्माद् ध्रुवा स्मृता ' का. ८. '°च' का. ९. 'नानापथ्यागमाश्रयाः' का. १०. 'एतासां चैव वक्ष्यामि सस्तरूपाङ्गकल्पनम् ।' का. ११. 'उपपातः प्रवृत्तश्च प्रावेशिकी प्रकीर्त्यते ।' का. १२. 'ध्रुवादौ शीर्षकस्मृते' का. १३. 'ह्युपपातश्च' का. १४. 'अद्दिताद्याः प्रकीर्तिता ' का. १५. इतः प्रभृति श्लोकद्वयं प. पुस्तके नास्ति । १६. 'विमाप्यन्ते ध्रुवास्तथा ।' का.

त्र्यस्रश्च चतुरस्रश्च तालः कार्यो ध्रुवा[1]त्मकः ।
षट्कलोऽष्टकलश्चैव यैः[2] पूर्वं परिकीर्तितः ॥ १५ ॥
पूर्वेषामेवं[3] गीतानां यान्यङ्गानि स्मृतान्यथ ।
तेषां[4] मध्याचास्तु कार्यो मक्षकं (?) विव(वि ?)धोऽथ वा ॥ १६ ॥
पदवर्णस[5]मासैस्तु विदारीत्यभिसंज्ञिता ।
एतेषां संप्रवक्ष्[6]यामि विधि(धिं ?)प्रकृतिसंभवम् ॥ १७ ॥
ज्येष्ठानां[7] वृत्तसंयुक्तं कुर्यादादौ तथैव च ।
विव(वि ?)धं चैव मध्यानां नीचानामेककं तथा ॥ १८ ॥
त्र्यस्रं वा चतुरस्रं वा योगं ज्ञात्वा[8] प्रयोजकम् ।
तेन प्रमाणयोगेन ध्रुवा स्यादाव[9]सानिकी ॥ १९ ॥
गीय[10]न्त्यां चातिशक्कर्यामन्तरे या व्य[11]वस्थिता ।
तेन प्रमाणयोगेन[12] ध्रुवा कार्यावसानकी ॥ २० ॥
शक्कर्यां[13] चातिकृत्यां च यान्तरे त्वावसानकी ।
तेषां[14] मात्रा द्विर्विहिता ध्रुवा पादमयी स्मृता ॥ २१ ॥
यतिछन्दोविधानेन गुरुलघ्वक्षरान्वितः ।
कार्यो मात्राप्रमाणेन ध्रुवावो[15](पा ?)दोऽवसानिकः ॥ २२ ॥
म[16]ध्यमोत्तमयोः कार्या चतुरस्रावसानिकी ।
म[17]ध्यावसाना कर्तव्या त्र्यस्रा चैवावसानिके ॥ २३ ॥

---

१. 'ध्रुवास्त्रश्च' का. २. 'यस्तु पूर्वं प्रकीर्तित.' का. ३ 'सर्वेषामेव' का. ४. 'तेषां सविविधं एकैकं च भविष्यति' का. ५ एतदर्धं का. पुस्तके नास्ति । ६. 'चैव वक्ष्यामि विधिं' का.

७. 'उत्तमाना भवेद्वृत्तं मध्यला विविधं स्मृतम् ।
नीचानामेककं कार्यं ध्रुवा पञ्चविधा बुधैः ॥' इति का.

८. 'श्लोकं ज्ञात्वा प्रयोजक.' का. ९. 'कार्यावसानिकी' का. १० 'गायन्त्याश्चाति-चाकर्या' का. ११. 'वा' का. १२. 'पादप्रमाणेन' का. १३. 'शक्कर्याश्चातिकृत्याये'… ……का. १४. 'नरवैवसानिके तेषां मध्यार्धविहिता ध्रुवा ।' का. १५. 'ध्रुवापादो' का. १६. 'मध्यमोत्तमानां कर्तव्या ध्रुवा त्र्यस्रावसानिकी ।' का. १७. एतदर्धं नास्त्येव का. पुस्तके ।

अर्थे[1](थ ?) पूर्णपदी या तु तस्या वृत्तं प्रयोजयेत्[2] ।
तत्रेष्टवृत्तप्रामाण्याद्ध्रुवा कार्या[3] प्रमाणतः ॥ २४ ॥
ध्रुवास्तु पञ्च[4] विज्ञेया नानावृत्तसमुद्भवाः ।
यथास्थानरसोपेता ह्युत्तमाधममध्यमा [ः] ॥ २५ ॥
कनीयसीग्रहा कांचित्[6]संनिपातग्रहापरा ।
तथा[7] कारेग्रहा काचित्त्रिविधा तु ध्रुवा स्मृता ॥ २६[8] ॥
गन्धर्वे[9] यत्स्मृतं पूर्वं स्वरतालपदात्मकम् ।
पदं तस्य भवेद्वस्तु स्वरतालानुभावितम् ॥ २७[10] ॥
यत्[11]स्यादक्षरसंबद्धं तत्सर्वं पदसंज्ञितम् ।
निबद्धं चाति(नि ?)बद्धं[12] च येनमेन(द्वेवमेतद् ?)[13]द्विधा स्मृतम् २८
अतालं च सतालं च द्विप्रकारं तदुच्यते ।[14]
सतालं च ध्रुवार्थेषु निबद्धं सर्वसाधकम् ॥ २९ ॥
यत्तु वा करणोपेतं सर्वातोद्यानुरञ्जनम् ।[16]
अतालेन[17] निबद्धं च पदतालं प्रकीर्तितम् ॥ ३० ॥

नियताक्षरसंबद्धं[18] छन्दोयतिसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं सतोल्पतनाक्षरम् ॥ ३१ ॥

---

१. 'अथ पूर्णपदी' का. २. 'प्रवेशनम्' का. ३. 'कार्यावसानिकी' का. ४. ''थ' का. ५. 'हि' इति नास्ति का. पुस्तके ६. 'कनिष्ठिकाग्रहा कापि' का. ७. 'तथा पापग्रहा चैव' का. ८. 'इतोऽग्रे का. पुस्तके—

'प्राविशिकी तु प्रथमा द्वितीयाक्षेपिकी स्मृता ।
प्रासादिकी तृतीया च चतुर्थी चान्तरा ध्रुवा ॥'
नैष्क्रामिकी च विज्ञेया पञ्चमी च ध्रुवा बुधैः ।
एतेषां चैव वक्ष्यामि छन्दोरसनिदर्शनम् ॥' इत्यधिकमत्र ।

९. 'गान्धर्वं यन्मया प्रोक्तं' का. १०. ''भावकम्' का. ११. 'यत्किंचिदक्षरकृतं' का. १२. 'चानिबद्धं च' का. १३. 'तत्पदं द्विविधं स्मृतम्' का. १४. 'तद्भवेत्' का. १५. 'तच्च वै स्मृतम्' का. १६. 'तुरञ्जकम्' का. १७. 'अतालमनिबद्धं च पदं तु ज्ञेयमेव च ।' का. १८. 'संबन्धं' का. १९. 'नानाछन्दःसमुद्भवम्' का.

